सा वध्यमाना समरे पाण्डुसेना महात्मभिः ।
भ्राम्यते बहुधा राजन्मारुतेनेव नौर्जले ॥ ७
यथा हि शैशिरः कालो गवां मर्माणि कृन्तति
तथा पाण्डुसुतानां वै भीष्मो मर्माणि कृन्तति
तथैव तव सैन्यस्य पार्थेन च महात्मना ।
नवमेघप्रतीकाशाः पातिता बहुधा गजाः ९
मृद्यमानाश्च दृश्यन्ते पार्थेन नरयूथपाः ।
इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः १०
पेतुरार्तस्वरं घोरं कृत्वा तत्र महागजाः ।
आनद्धाभरणैः कायैर्निहतानां महात्मनाम् ॥
छन्नमायोधनं रेजे शिरोभिश्च सकुण्डलैः ।
तस्मिन्नेव महाराज महावीरवरक्षये ॥ १२
भीष्मे च युधि विक्रान्ते पाण्डवे च धनञ्जये
ते पराक्रान्तमालोक्य राजन् युधि पितामहं
अभ्यवर्तन्त ते पुत्राः सर्वे सैन्यपुरस्कृताः ।
इच्छन्तो निधनं युद्धे स्वर्गं कृत्वा परायणम्
पाण्डवानभ्यवर्तन्त तस्मिन् वीरवरक्षये ।
पांडवाऽपि महाराज स्मरंतो विविधान्बहून्
क्लेशान् कृतान् सपुत्रेण त्वया पूर्वं नराधिप ।
भयं त्यक्त्वा रणे शूरा ब्रह्मलोकाय तत्पराः
तावकास्तव पुत्रांश्च योधयन्ति प्रहृष्टवत् ।
सेनापतिस्तु समरे प्राह सेनां महारथः ॥ १७
अभिद्रवत गाङ्गेयं सोमकाः सृञ्जयैः सह ।
सेनापतिवचः श्रुत्वा सोमकाः सृञ्जयाश्च ते ॥
अभ्यद्रवन्त गाङ्गेयं शरवृष्ट्या समाहताः ।
वध्यमानस्ततो राजन् पिता शान्तनवस्तव ॥
अमर्षवशमापन्नो योधयामास सृञ्जयान् ।
तस्य कीर्तिमतस्तात पुरा रामेण धीमता २०
संप्रदत्तास्त्रशिक्षा वै परानीकविनाशनी ।
स तां शिक्षामधिष्ठाय कुर्वन् परबलक्षयम् ॥
अहन्यहानि पार्थानां वृद्धः कुरुपितामहः ।
भीष्मो दश सहस्राणि जघान परवीरहा २२
तस्मिंस्तु दशमे प्राप्ते दिवसे भरतर्षभ ।
भीष्मेणैकेन मत्स्येषु पञ्चालेषु च संयुगे २३
गजाश्वममितं हत्वा हताः सप्त महारथाः ।
हत्वा पञ्च सहस्राणि रथानां प्रपितामहः २४
नराणां च महायुद्धे सहस्राणि चतुर्दश ।
दन्तिनां च सहस्राणि हयानामयुतं पुनः २५
शिक्षाबलेन निहतं पित्रा तव विशांपते ।
ततः सर्वमहीपानां क्षपयित्वा वरूथिनीम् २६

विराटस्य प्रियो भ्राता
शतानीको निपातितः ।
शतानीकं च समरे
हत्वा भीष्मः प्रतापवान् ॥ २७
सहस्राणि महाराज राज्ञां भल्लैरपातयत् ।
उद्विग्नाः समरे योधा विक्रोशन्ति धनञ्जयम्
ये च केचन पार्थानामभियाता धनञ्जयम् ।
राजानो भीष्ममासाद्य गतास्ते यमसादनम्
एवं दश दिशो भीष्मः शरजालैः समन्ततः
अतीत्य सेनां पार्थानामवतस्थे चमूमुखे ॥ ३०
स कृत्वा सुमहत् कर्म तस्मिन्वै दशमेऽहनि
सेनयोरन्तरे तिष्ठन् प्रगृहीतशरासनः ॥ ३१
न चैनं पार्थिवाः केचि-
च्छक्ता राजन्निरीक्षितुम् ।
मध्यं प्राप्तं यथा ग्रीष्मे
तपन्तं भास्करं दिवि ॥ ३२
यथा दैत्यचमूं शक्रस्तापयामास संयुगे ।
तथा भीष्मः पाण्डवेयांस्तापयामास भारत
तथा चैनं पराक्रान्तमालोक्य मधुसूदनः ।
उवाच देवकीपुत्रः प्रीयमाणो धनञ्जयम् ३४
एष शान्तनवो भीष्मः सेनयोरन्तरे स्थितः ।
सन्निहत्य बलादेनं विजयस्ते भविष्यति ३५
बलात् संस्तम्भयस्वैनं यत्रैषा भिद्यते चमूः ।
न हि भीष्मशरानन्यः सोढुमुत्सहते विभो ॥
ततस्तस्मिन्क्षणे राजंश्चोदितो वानरध्वजः ।
सध्वजं सरथं साश्वं भीष्ममन्तर्दधे शरैः ३७
स चापि कुरुमुख्यानामृषभः पाण्डवेरितान्
शरव्रातैः शरव्रातान् बहुधा विदुधाव तान्
ततः पञ्चालराजश्च धृष्टकेतुश्च वीर्यवान् ।
पाण्डवो भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ३९
यमौ च चेकितानश्च केकयाः पञ्च चैव ह ।
सात्यकिश्च महाबाहुः सौभद्रोऽथ घटोत्कचः
द्रौपदेयाः शिखण्डी च
कुन्तिभोजश्च वीर्यवान् ।
सुशर्मा च विराटश्च
पाण्डवेया महाबलाः ॥ ४१
एते चान्ये च बहवः पीडिता भीष्मसायकैः ।
समुद्धृताः फाल्गुनेन निमग्नाः शोकसागरे ४२
ततः शिखण्डी वेगेन प्रगृह्य परमायुधम् ।
भीष्ममेवाभिदुद्राव रक्ष्यमाणः किरीटिना ॥

ततोऽस्यानुचरान् हत्वा
सर्वान् रणविभागवित्।
भीष्ममेवाभिदुद्राव बीभत्सुरपराजितः ॥४४
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
विराटो द्रुपदश्चैव माद्रीपुत्रौ च पाण्डवौ॥४५
दुद्रुवुर्भीष्ममेवाजौ रक्षिता दृढधन्वना ।
अभिमन्युश्च समरे द्रौपद्याः पञ्च चात्मजाः।
दुद्रुवुः समरे भीष्मं समुद्यतमहायुधाः।
ते सर्वे दृढधन्वानः संयुगेष्वपलायिनः॥ ४७
बहुधा भीष्ममानर्च्छुर्मार्गणैः क्षतमार्गणैः।
विधूय तान् बाणगणान्ये मुक्ताः पार्थिवोत्तमैः
पाण्डवानामदीनात्मा व्यगाहत वरूथिनीम्
चक्रे शरविघातं च क्रीडन्निव पितामहः ४९
नाभिसन्धत्त पाञ्चाल्ये
स्मयमानो मुहुर्मुहुः।
स्त्रीत्वं तस्यानुसंस्मृत्य
भीष्मो बाणान् शिखण्डिने ॥ ५०
जघान द्रुपदानीके रथान् सप्त महारथः।
ततः किलकिलाशब्दः क्षणेन समभूत्तदा ५१
मत्स्यपाञ्चालचेदीनां तमेकमभिधावताम्।
ते नराश्वरथव्रातैर्मार्गणैश्च परन्तप ॥ ५२
तमेकं छादयामासुर्मेघा इव दिवाकरम् ।
भीष्मं भागीरथीपुत्रं प्रतपन्तं रणे रिपून् ५३
ततस्तस्य च तेषां च युद्धे देवासुरोपमे।
किरीटीभीष्ममानर्च्छत्पुरस्कृत्यशिखण्डिनम्

इति श्रीमहाभारते भीष्मपर्वणि भीष्मवधपर्वणि भीष्मपराक्रमे
अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥



## ११९

सञ्जय उवाच।
एवं ते पाण्डवाः सर्वे पुरस्कृत्य शिखण्डिनम्
विव्यधुः समरे भीष्मं परिवार्य समन्ततः १
शतघ्नीभिः सुघोराभिः परिघैश्च परश्वधैः।
मुद्गरैर्मुसलैः प्रासैः क्षेपणीयैश्च सर्वशः॥ २
शरैः कनकपुङ्खैश्च शक्तितोमरकम्पनैः।
नाराचैर्वत्सदन्तैश्च भुशुण्डीभिश्च सर्वशः ३
अताडयन् रणे भीष्मं सहिताः सर्वसृञ्जयाः।
स विशीर्णतनुत्राणः पीडितो बहुभिस्तदा ४
न विव्यथे तदा भीष्मो भिद्यमानेषु मर्मसु।
सन्दीप्तशरचापाग्निरस्त्रप्रसृतमारुतः॥ ५
नेमिनिर्ह्रादसन्तापो महास्त्रोदयपावकः।
चित्रचापमहाज्वालो वीरक्षयमहेन्धनः॥ ६
युगान्ताग्निसमप्रख्यः परेषां समपद्यत।
विवृत्य रथसङ्घानामन्तरेण विनिःसृतः॥ ७
दृश्यते स्म नरेन्द्राणां पुनर्मध्यगतश्चरन्।
ततः पञ्चालराजं च धृष्टकेतुमचिन्त्य च ८
पाण्डवानीकिनीमध्यमाससाद विशांपते।
ततः सात्यकिभीमौ च पाण्डवं च धनञ्जयम्
द्रुपदं च विराटं च धृष्टद्युम्नं च पार्षतम्।
भीमघोषैर्महावेगैर्मर्मावरणभेदिभिः॥ १०
षडेतान्निशितैर्भीष्मः प्रविव्याधोत्तमैः शरैः।
तस्य ते निशितान्बाणान्सन्निवार्य महारथाः
दशभिर्दशभिर्भीष्ममर्दयामासुरोजसा।
शिखण्डी तु महाबाणान् यान्मुमोच महारथः
न चक्रुस्ते रुजं तस्य स्वर्णपुङ्खाः शिलाशिताः
ततः किरीटी संरब्धो भीष्ममेवाभ्यधावत
शिखंडिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत्
भीष्मस्य धनुषश्छेदं नामृष्यन्त महारथाः॥
द्रोणश्च कृतवर्मा च सैन्धवश्च जयद्रथः।
भूरिश्रवाः शलः शल्यो भगदत्तस्तथैव च १५
सप्तैते परमक्रुद्धाः किरीटिनमभिद्रुताः।
तत्र शस्त्राणि दिव्यानि दर्शयन्तो महारथाः॥
अभिपेतुर्भृशं क्रुद्धाश्छादयन्तश्च पाण्डवम्।
तेषामापततां शब्दः शुश्रुवे फाल्गुनं प्रति १७

अदीनात्मा अक्षीणस्वभावः ॥ ४९ ॥ इति श्रीमहाभारते भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

११९. एवमिति ॥१॥ मर्मावरणं बर्म देहचर्म वा ॥१०॥

उद्धृतानां यथा शब्दः समुद्राणां युगक्षये ।
घ्नतानयत गृह्णीत विद्ध्यध्वमवकर्तत ॥ १८
इत्यासीत्तुमुलः शब्दः फाल्गुनस्य रथं प्रति ।
तं शब्दं तुमुलं श्रुत्वा पाण्डवानां महारथाः ॥
अभ्यधावन् परीप्सन्तः फाल्गुनं भरतर्षभ ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ २०
विराटद्रुपदौ चोभौ राक्षसश्च घटोत्कचः ।
अभिमन्युश्च संक्रुद्धः सप्तैते क्रोधमूर्छिताः २१
समभ्यधावंस्त्वरिताश्चित्रकार्मुकधारिणः ।
तेषां समभवद्युद्धं तुमुलं लोमहर्षणम् ॥ २२
संग्रामे भरतश्रेष्ठ देवानां दानवैरिव ।
शिखण्डी तु रणे श्रेष्ठो रक्ष्यमाणः किरीटिना
अविध्यद्दशभिर्भीष्मं छिन्नधन्वानमाहवे ।
सारथिं दशभिश्चास्य ध्वजं चैकेन चिच्छिदे
सोऽन्यत्कार्मुकमादाय गाङ्गेयो वेगवत्तरम् ।
तदप्यस्य शितैर्बाणैस्त्रिभिश्चिच्छेद फाल्गुनः
एवं स पाण्डवः क्रुद्ध आत्तमात्तं पुनःपुनः ।
धनुश्चिच्छेद भीष्मस्य सव्यसाची परन्तपः ॥
स छिन्नधन्वा संक्रुद्धः सृक्किणी परिसंलिहन् ।
शक्तिं जग्राह तरसा गिरीणामपि दारणीम् ॥
तां च चिक्षेप संक्रुद्धः फाल्गुनस्य रथं प्रति ।
तामापतन्तीं संप्रेक्ष्य ज्वलन्तीमशनीमिव २८
समादत्त शितान् भल्लान् पञ्च पाडवनन्दनः ।
तस्य चिच्छेद तां शक्तिं पञ्चधा पञ्चभिः शरैः
संक्रुद्धो भरतश्रेष्ठ भीष्मबाहुप्रवेरिताम् ।
सा पपात तथा च्छिन्ना संक्रुद्धेन किरीटिना
मेघवृन्दपरिभ्रष्टा विच्छिन्नेव शतह्रदा ।
छिन्नां तां शक्तिमालोक्य
भीष्मः क्रोधसमन्वितः ॥ ३१
अचिन्तयद्रणे वीरो बुद्ध्या परपुरञ्जयः ।
शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान्३२
यद्येषां न भवेद्गोप्ता विष्वक्सेनो महाबलः ।
कारणद्वयमास्थाय नाहं योत्स्यामि पाण्डवान्
अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः
पित्रा तुष्टेन मे पूर्वं यदा कालीमुदावहम् ३४
स्वच्छन्दमरणं दत्तमवध्यत्वं रणे तथा ।
तस्मान्मृत्युमहं मन्ये प्राप्तकालमिवात्मनः३५
एवं ज्ञात्वा व्यवसितं भीष्मस्यामिततेजसः ।
ऋषयो वसवश्चैव वियत्स्था भीष्ममब्रुवन् ३६
यत्ते व्यवसितं तात तदस्माकमपि प्रियम् ।
तत्कुरुष्व महाराज युद्धे बुद्धिं निवर्तय ॥ ३७
अस्य वाक्यस्य निधने
प्रादुरासीच्छिवोऽनिलः ।
अनुलोमः सुगन्धी च पृषतैश्च समन्वितः ३८
देवदुन्दुभयश्चैव संप्रणेदुर्महास्वनाः ।
पपात पुष्पवृष्टिश्च भीष्मस्योपरि मारिष ३९
न च तच्छुश्रुवे कश्चित्तेषां संवदतां नृप ।
ऋते भीष्मं महाबाहुं मां चापि मुनितेजसा ॥
संभ्रमश्च महानासीत् त्रिदशानां विशांपते ।
पतिष्यति रथाद्भीष्मे सर्वलोकप्रिये तदा ४१
इति देवगणानां च वाक्यं श्रुत्वा महातपाः ।
ततः शान्तनवो भीष्मो बीभत्सुं नात्यवर्तत
भिद्यमानः शितैर्बाणैः सर्वावरणभेदिभिः ।
शिखण्डी तु महाराज भरतानां पितामहम् ॥
आजघानोरसि क्रुद्धो नवभिर्निशितैः शरैः ।
स तेनाभिहतः संख्ये भीष्मः कुरुपितामहः ॥
नाकम्पत महाराज क्षितिकम्पे यथाचलः ।
ततः प्रहस्य बीभत्सुर्व्याक्षिपन् गांडिवं धनुः
गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
पुनः पुनः शतैरेनं त्वरमाणो धनञ्जयः ॥ ४६
सर्वगात्रेषु संक्रुद्धः सर्वमर्मस्वताडयत् ।
एवमन्यैरपि भृशं विद्ध्यमानः सहस्रशः॥ ४७
तानप्याशु शरैर्भीष्मः प्रविव्याध महारथः ।
तैश्च मुक्ताञ्छरान् भीष्मो युधि सत्यपराक्रमः
निवारयामास शरैः समं सन्नतपर्वभिः ।
शिखण्डी तु रणे बाणान् यान्मुमोच महारथः
न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाः शिलाशिताः
ततः किरीटी संक्रुद्धो भीष्ममेवाभ्यवर्तत ५०
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत्
अथैनं नवभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ५१
सारथिं विशिखैश्चास्य दशभिः समकम्पयत् ।
सोऽन्यत् कार्मुकमादाय गाङ्गेयो बलवत्तरम्
तदप्यस्य शितैर्भल्लैस्त्रिधा त्रिभिरघातयत् ।
निमेषार्धेन कौन्तेय आत्तमात्तं महारणे ॥ ५३
एवमस्य धनूंष्याजौ चिच्छेद सुबहून्यथ ।
ततः शान्तनवो भीष्मो बीभत्सुं नात्यवर्तत ॥
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
सोऽतिविद्धो महेष्वासो दुःशासनमभाषत५५

आत्तमात्तं गृहीतं गृहीतम् ॥२६॥ व्यवसितं निश्चितम् ॥३७॥ निधने समाप्तौ ॥३८॥ मुनितेजसा व्यासप्रभावेण ॥४०॥



[ भीष्म उवाच— ]

मुसला इव मे घ्नन्ति नेमे बाणाः शिखण्डिनः।
वज्रदण्डसमस्पर्शा वज्रवेगदुरासदाः ६२

भीष्म. अ. ११९ पृ. २८५